मालत्यादीनि वै प्रभो ॥ मयानीतानि पुष्पाणि गृहाण परमेश्वर ॥ १ ॥" मूलं पठित्वा ॐ भूर्भुवः स्वः श्रीमदुच्छिष्टगणपतये नमः रक्तपुष्पं समर्पयामि ॥ तर्जन्यावंगुष्ठमूललग्ने पुष्पमुद्रा ॥ इति पुष्पम् ॥ २० ॥ एवं पुष्पांतं पूजयित्वा प्रयोगोक्तावरणपूजां च कृत्वा धूपादिपूजनं कुर्यात् ॥

॥ अथ धूपादिपूजाप्रयोगः ॥ फडिति धूपपात्रं संप्रोक्ष्य नम इति गंधपुष्पाभ्यां संपूज्य पुरतो

१ पुष्पं पत्रं फलं देवे न च दद्यादधोमुखम् ॥ पुष्पांजलौ न तद्दोषस्तथा पर्य्युंषितस्य च ॥

निधाय रं इति वह्निबीजेन उपरि अग्निं संस्थाप्य तदुपरि दशांगं दत्त्वा घंटां च नादयन् ॥ "वनस्पतिरसोद्भूतो गंधाढ्यो गन्ध उत्तमः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ १ ॥" मूलं पठित्वा ॐ भूर्भुवः स्वः श्रीमदुच्छिष्टगणपतये नमः धूपं समर्पयामि ॥ इति पठित्वा देवस्य वामभागे धूपपात्रं संस्थाप्य तर्जनीमूलयोरंगुष्ठयोगो धूपमुद्रा तां प्रदर्शयेत् ॥ इति धूपम् ॥२१॥ततो दीपपात्रं गोघृतेनापूर्य वर्णाक्षरतंतुभि

वर्तिं निक्षिप्य प्रणवेन प्रज्वाल्य घंटां वादयन्न् मंत्रं पठेत् ॥ "सुप्रकाशो महादीपः सर्वतस्तिमिरापहः ॥ सबाह्याभ्यंतरं ज्योतिर्दीपोयं प्रतिगह्यताम्॥१॥" मूलं पठित्वा ॐ भूर्भुवः स्वः श्रीमदुच्छिष्टगणपतये नमः दीपं समर्पयामि ॥ इति पठित्वा देवस्य दक्षिणभागे निधाय मध्यमे अंगुष्ठलग्ने दीपमुद्रा तां प्रदर्शयेत् ॥ इति दीपम् ॥२२॥ अथ नैवेद्यम् ॥ देवस्याग्रे जलेन चतुरस्त्रं मंडलं कृत्वा स्वर्णादिनिर्मितं भोजनपात्रं सं

स्थाप्य तन्मध्ये मोदकं गुडमिश्रितपायसं वा
निधाय ॐ यं इति वायुबीजेन द्वादशवाराभि
मंत्रिताऽर्घजलेन संप्रोक्ष्य मूलेन संवीक्ष्य अधो
मुखदक्षिणहस्तोपरि तादृशं वामं नैवेद्येनाच्छा
द्य ॐ यं इति वायुबीजं षोडशधा संजप्य वा
युना तद्गतदोषान् संशोष्य दक्षिणकरतले ॐ रं
इत्यग्निबीजं विचिंत्य तत्पृष्ठलग्नं वामकरतलं
कृत्वा नैवेद्यं प्रदर्श्य ॐ रं इति वह्निबीजेन षो
डशवारं संजप्य तदुत्पन्नाग्निना तद्दोषं दग्ध्वा

बामकरतले ॐ वं इति अमृतबीजं विचिंत्य तत्पृष्ठलग्नं दक्षिणकरतलं कृत्वा नैवेद्यं प्रदर्श्य॥ पुनः ॐ वं इति सुधाबीजं षोडशवारं जपित्वा तदुत्थामृतधारया प्लावितं विभाव्य मूलमंत्रेण प्रोक्ष्य धेनुमुद्रां प्रदर्श्य मूलेनाष्टधाभिमंत्र्य गंध पुष्पाभ्यां संपूज्य वामांगुष्ठेन नैवेद्यपात्रं स्पृष्ट्वा दक्षिणकरेण जलं गृहीत्वा–"सत्पात्रसिद्धं सुह विर्विविधानेकभक्षणम्॥ निवेदयामि देवेश सानु गाय गृहाण तत्॥ १॥" मूलं पठित्वा ॐ भू

र्भुवः स्वः सांगाय सपरिवाराय श्रीमदुच्छिष्टग
णपतये नमः नैवेद्यं समर्पयामि इति जलमुत्सृ
ज्य अनामामूलयोरंगुष्ठयोगे नैवेद्यमुद्रा तां प्रद
र्शयेत् ॥ इति नैवेद्यम् ॥ २३ ॥ अथांतःपटम् ॥
"ब्रह्मेशाद्यैः सरसमभितः सोपविष्टैः समंताच्छि
जद्वालव्यजननिकरैर्वीज्यमानः सखीभिः ॥ नर्म
क्रीडाप्रहसनपरान्पंक्तिभोक्तॄन्हसन्वै भुंक्ते पात्रे
कनकघटिते षड्रसान्श्रीगणेशः ॥ १ ॥ शाली
भक्तं सुपक्कं शिशिरकरासितं पायसापूपसूपं लेह्यं

पेयं च चोष्यं सितममृतफलं घारिकाद्यं सुखा
द्यम् ॥ आज्यं प्राज्यं समोज्यं नयनरुचिकरं
राजिकैलामरीचस्वादीयः शाकराजीपरिकरम
मृताहारजोषं जुषस्व ॥ २ ॥" इत्यंतःपटम् ॥
॥ २४ ॥ "नमस्ते देवदेवेश सर्वतृप्तिकरं परम् ॥
अखंडानन्दसंपूर्णं गृहाण जलमुत्तमम् ॥१॥" मूलं
पठित्वा ॐ भूर्भुवः स्वः श्रीमदुच्छिष्टगणपतये
नमः जलं समर्पयामि ॥ इति जलम् ॥ २५ ॥
पुनर्गंडूषार्थं जलं दत्त्वा मूलेन शुद्धाचमनं च

दद्यात् ॥ अथ तांबूलम् ॥ " पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ॥ एलाचूर्णादिभिर्युक्तं तांबूलं प्रतिगृह्यताम् ॥ १ ॥ " मूलं पठित्वाॐ भूर्भुवः स्वः श्रीमदुच्छिष्टगणपतये नमः तांबूलं समर्पयामि ॥ इति तांबूलम् ॥ २६ ॥ अथ फलम् ॥ "इदं फलं मया देव स्थापितं पुरतस्तव ॥ तेन मे सफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ १ ॥ " मूलं पठित्वा ॐ भूर्भुवः स्वः श्रीमदुच्छिष्टगणपतये नमः फलं समर्पयामि ॥ इति फलम् ॥ २७ ॥

शक्तश्चेत् क्षेत्रादिदक्षिणापर्यंतं सर्वदेवोपयोगिपं
द्धतिमार्गेण दत्त्वा आरात्रिकं कुर्य्यात् ॥ अथ
कर्पूरारात्रिकम् ॥ "कदलीगर्भसंभूतं कर्पूरं च प्र
दीपितम् ॥ आरात्रिकमहं कुर्वे पश्य मे वरदो
भव ॥ १ ॥" मूलं पठित्वा ॐ भूर्भुवः स्वः श्रीम
दुच्छिष्टगणपतये नमः कर्पूरारात्रिकं समर्पयामि।
इति पठित्वा मूलेन देवोपरि नेत्रादिपादपर्यंतं न
ववारं त्रिवारं वा भ्रामयेत् घंटां च नादयेत् ॥
इति कर्पूरारात्रिकम् ॥ २८ ॥ अथ प्रदक्षिणा ॥

"यानि कानि च पापानि जन्मांतरकृतानि वै ॥
तानि सर्वाणि नश्यंतु प्रदक्षिणपदेपदे ॥१॥" इति
मंत्रेण तिस्रः प्रदक्षिणा दद्यात् ॥ मूलं पठित्वा
ॐ भूर्भुवः स्वः श्रीमदुच्छिष्टगणपतये नमः प्रद
क्षिणां समर्पयामि ॥ इति प्रदक्षिणा ॥ २१ ॥ अथ
पुष्पांजलिः ॥ "नानासुगंधपुष्पाणि यथाकालो
द्भवानि च ॥ पुष्पांजलिं मया दत्तं गृहाण परमे
श्वर ॥१॥" मूलं पठित्वा ॐ भूर्भुवः स्वः श्रीमदु
च्छिष्टगणपतये नमः पुष्पांजलिं समर्पयामि ॥

इति पुष्पांजलिः ॥ २० ॥ अथ साष्टांगप्रणामः ॥
"प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥"
इति वदन् साष्टांगप्रणामे नाम निवेदयेत् ॥२१॥
तत्स्तुतिपाठेन देवं स्तुत्वा बद्धाञ्जलिपूर्वकं क्षमा
पयेत् ॥ "ज्ञानतोऽज्ञानतो वाथ यन्मया क्रियतेऽ
शिवम् ॥ मम कृत्यमिदं सर्वमिति देव क्षमस्व
मे ॥१॥"अपराधसहस्राणि क्रियंतेऽहर्निशं मया॥
दासोहमिति मां मत्वा क्षमस्व परमेश्वर ॥२ ॥
अपराधो भवत्येव सेवकस्य पदेपदे ॥ कोऽपरः

सहतां लोके केवलं स्वामिनं विना ॥ ३ ॥ भूमौ स्खलितपादानां भूमिरेवावलंबनम् ॥ त्वयि जाता पराधानां त्वमेव शरणं शिव ॥ ४ ॥" इति बद्धांजलिपूर्वकं क्षमापनम् ॥ ३२॥ अथ प्रार्थना "यदुक्तं यदि भावेन पत्रं पुष्पं फलं जलम्॥ निवेदितं च नैवेद्यं गृहाण त्वनुकंपया ॥ १ ॥" इति प्रार्थ्य देवस्य दक्षिणकरे किंचिज्जलं दद्यात् ॥ इति प्रार्थना ॥ ३३ ॥ ततः पश्चात्सर्वदेवोपयोगिपद्धतिमार्गेण मालायाः संस्कारान् कुर्यात् ॥ अशक्तश्चे

त्साधारणसंस्कारं कुर्यात्॥तथा च जपमालामानीय क्वचित्पात्रे वामहस्तेनाच्छाद्य मूलेनार्घ्योदकेनाभ्युक्ष्य "ॐ मालेमाले महामाये सर्वशक्तिस्वरूपिणि। चतुर्वर्गस्त्वयि न्यस्तस्तस्मात्त्वं सिद्धिदा भव ॥१॥" इत्यनेन गंधपुष्पाभ्यां संपूज्य ततो देवतानिवेदितमोदकं तांबूलं वा स्वयं भुक्त्वा पुनः "अविघ्नं कुरु माले त्वं सर्वकार्येषु सर्वदा॥" इति मंत्रेण दक्षिणहस्ते मालामादाय हृदये धारयन् स्वेष्टदेवतां ध्यात्वा मध्यमांगुलिमध्यपर्वणि

संस्थाप्य ज्येष्ठाग्रेण भ्रामयित्वा एकाग्रचित्तो मंत्रार्थं स्मरन् यथाशक्ति मूलमत्रं जपेत् ॥ जपां ते-"ॐ त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम॥ शुभं कुरुष्व मे भद्रे यशो वीर्यं च देहि मे ॥१॥" ॐ ह्रीं सिद्ध्यै नमः ॥इति मालां शिरसि निधाय गोमुखीं रहसि स्थापयेत्॥नाशुचिः स्पर्शयेत्।ना न्यस्मै दद्यात्।अशुचिस्थाने न निधापयेत्।स्वयो निवृत्तमां कुर्यात् । ततः कवचस्तोत्रसहस्रनामा दिकं पठित्वा पुनः मूलमंत्रस्य ऋष्यादिन्यासं

करन्यासं हृदयादिषडंगन्यासं च कृत्वा पंचोपचारैः संपूज्य पुष्पांजलिं दद्यात्। ततः अर्घोदकेन चुलुकमादाय-" ॐ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्॥सिद्धिर्भवतु मे देव त्वत्प्रसादात्त्वयि स्थितिः॥१॥" ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्तितुर्यावस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा॥ मां मदीयं च सकलं श्रीमदुच्छिष्टगण

पतिदेवतायै समर्पयामि नमः ॥ ॐ तत्सदिति ब्रह्मार्पणं भवतु ॥ इति देवदक्षिणकरे जपसमर्पण जलं दत्त्वा कृताञ्जलिपूर्वकं क्षमापनं कुर्यात् ॥ अथ क्षमापनम् ॥ " आवाहनं न जानामि न जानामि विसर्जनम् ॥ पूजाभागं न जानामि त्वं गतिः परमेश्वर ॥ १ ॥ कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ॥ अंतश्चरसि भूतानामिष्टस्त्वं परमेश्वर ॥ २ ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥ तस्मात्का

रुण्यभावेन रक्षस्व परमेश्वर ॥ ३ ॥ शतयोनि
सहस्राणां सहस्रेषु व्रजाम्यहम् ॥ तेषु चेष्टाच
ला भक्तिरच्युतास्तु सदा त्वयि ॥ ४ ॥ गतं
पापं गतं दुःखं गतं दारिद्र्यमेव च ॥ आगता
सुखसंपत्तिः पुण्याच्च तव दर्शनात् ॥ ५ ॥
मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥ यत्पू
जितं मया देव परिपूर्णं तदस्तु मे ॥ ६ ॥ यदक्ष
रपदभ्रष्टं मात्राहीनं च यद्भवेत् ॥ तत्सर्वं क्षम्य
तां देव प्रसीद परमेश्वर ॥ ७ ॥ देवो दाता च

भोक्ता च देवरूपमिदं जगत्॥ देवं जपति सर्वत्र
यो देवः सोहमेव हि ॥ ८ ॥ क्षमस्व देवदेवेश
क्षम्यते भुवनेश्वर ॥ तव पादांबुजे नित्यं निश्च
ला भक्तिरस्तु मे" ॥ ९ ॥ इति कृतांजलिः प्रार्थ
यित्वा ततः शंखमुद्धृत्य देवोपरि भ्रामयित्वा ॥
" साधु वासाधु वा कर्म यद्यदाचरितं मया ॥ त
त्सर्वं कृपया देव गृहाणाराधनं मम "॥१॥ इत्यु
च्चरन्देवस्य दक्षिणहस्ते किंचिज्जलं दत्त्वा
प्राग्वदर्घ्यं देवशिरसि दत्त्वा शंखं यथास्था

ने निवेश्य मूलेन देवोच्छिष्टनैवेद्यादिकं शिरसि धृत्वा देवभक्तेषु विभज्य स्वयं भुक्त्वा बलीत्या दिकं गतसारनैवेद्यं च तदुच्छिष्टभोजिने इति निवेदयेत्॥अथ विसर्जनम्॥"गच्छगच्छ परस्था ने स्वस्थाने परमेश्वर ॥ यं हि ब्रह्मादयो देवा न विदुःपरमं पदम्" ॥ १ ॥ इत्यक्षतान्निक्षिप्य देवं स्वहृदयमध्ये स्थापयेत् ॥ तद्यथा-" तिष्ठ तिष्ठ परस्थाने स्वस्थाने परमेश्वर ॥ यत्र ब्रह्मादयो देवाः सर्वे तिष्ठंति मे हृदि" ॥१॥इति देवं हृदये सं

स्थाप्य मानसोपचारैः संपूज्य स्वात्मानं देवरूपं
भावयन् यथासुखं विहरेत्॥अयं सर्वगणपतिपूजा
क्रमः साधारणः ॥ इति श्रीमदुच्छिष्टगणपत्यु
पासनापञ्चरत्ने श्रीमदुच्छिष्टगणपतिपूजापद्धति
निरूपणं नाम द्वितीयं रत्नम् ॥ २ ॥ ॥ अथ
श्रीमदुच्छिष्टगणपतिकवचम् ॥ ॥ देव्युवाच ॥
देवदेव जगन्नाथ सृष्टिस्थितिलयात्मक ॥
विना ध्यानं विना मंत्रं विना होमं विना जपम् ॥
येन स्मरणमात्रेण लभ्यते चाशु चिंतितम्॥
॥१॥

तदेव श्रोतुमिच्छामि कथयस्व जगत्प्रभो ॥२ ॥
ईश्वर उवाच॥ शृणु देवि प्रवक्ष्यामि गुह्याद्गुह्यतरं
महत् ॥ उच्छिष्टगणनाथस्य कवचं सर्वसिद्धि
दम् ॥ ३ ॥ अल्पायासैर्विना कष्टैर्जपमात्रेण सिं
द्धिदम् ॥ एकांते निर्जनेऽरण्ये गह्वरे च रणांगणे
॥ ४ ॥ सिंधुतीरे च गांगीये कूले वृक्षतले जले ॥
सर्वदेवालये तीर्थे लब्ध्वा सम्यग्जपं चरेत् ॥५॥
स्नानशौचादिकं नास्ति नास्ति निर्बंधनं प्रिये ॥
दारिद्र्यांतकरं शीघ्रं सर्वतत्त्वं जनप्रिये ॥ ६ ॥ सह

स्वशपथं कृत्वा यदि स्नेहोस्ति मां प्रति॥निंदकाय
कुशिष्याय खलाय कुटिलाय च ॥७॥ दुष्टाय पर
शिष्याय घातकाय शठाय च॥वंचकाय वरघ्नाय
ब्राह्मणीगमनाय च ॥ ८ ॥ अशक्ताय च क्रूराय
गुरुद्रोहरताय च॥नदातव्यं न दातव्यं न दातव्यं
कदाचन ॥९॥ गुरुभक्ताय दातव्यं सच्छिष्याय
विशेषतः॥ तेषां सिद्ध्यंति शीघ्रेण ह्यन्यथा न च
सिद्ध्यति ॥ १० ॥ गुरुसंतुष्टिमात्रेण कलौ प्रत्य
क्षसिद्धिदम् ॥ देहोच्छिष्टैः प्रजप्तव्यं तथोच्छिष्टै

मंहामंत्रुः ॥ ११ ॥ आकाशे फलदं चेदं नान्यथा
वचनं मम ॥ एषा राजवती विद्या विना पुण्यं न
लभ्यते ॥ १२ ॥ अथ वक्ष्यामि देवेशि कवचं मं
त्रपूर्वकम् ॥ येन विज्ञानमात्रेण राजभोगफलप्र
दम् ॥ १३ ॥ ऋषिर्मे गणकः पातु शिरसि च नि
रंतरम् ॥ त्राहि मां देवि गायत्रीछन्द ऋषिः सदा
मुखे ॥ १४ ॥ हृदये पातु मां नित्यमुच्छिष्टगण
देवता ॥ गुह्ये रक्षतु तद्बीजं स्वाहा शक्तिश्च पाद

१ प्रजमन्य इति शेषः ।

ग्रेः ॥ १५ ॥ कामकीलकं सर्वांगे विनियोगश्च
पर्वदा ॥ पार्श्वद्वये सदा पातु स्वशक्तिं गणना
यकः ॥ १६ ॥ शिखायां पातु तद्वीजं भ्रूमध्ये
नारबीजकम् ॥ हस्तिवक्त्रश्च शिरसि लंबोदरो
ललाटके॥१७॥उच्छिष्टो नेत्रयोः पातु कर्णौ पातु
महात्मने ॥ पाशांकुशमहाबीजं नासिकायां च
रक्षतु ॥ १८॥ भूतीश्वरः परः पातु आस्यं जिह्वां
स्वयंवपुः ॥ तद्वीजं पातु मां नित्यं ग्रीवायां कंठ
दशके ॥ १९ ॥ गंबीजं च तथा रक्षेत्तथा त्वग्रे च

पृष्ठके ॥ सर्वकामश्च हृत्पातु पातु मां च करद्वये
॥ २० ॥ उच्छिष्टाय च हृदये वह्निबीजं तथो
दरे ॥ मायाबीजं तथा कट्यां द्वावूरू सिद्धिदाय
कः ॥२१ ॥ जंघायां गणनाथश्च पादौ पातु विना
यकः ॥ शिरसः पादपर्यंतमुच्छिष्टगणनायकः
॥ २२ ॥ आपादमस्तकांतं च उमापुत्रश्च पातु
माम् ॥ दिशोऽष्टौ च तथाकाशे पाताले विदिशा
ष्टके ॥ २३ ॥ अहर्निशं च मां पातु मदचंचल
लोचनः॥जलेऽनले च संग्रामे दुष्टकारागृहे वने

॥ २४ ॥ राजद्वारे घोरपथे पातु मां गणनायकः
इदं तु कवचं गुह्यं मम वक्त्राद्विनिर्गतम् ॥ २५ ॥
त्रैलोक्ये सततं पातु द्विभुजश्च चतुर्भुजः ॥बाह्य
मभ्यंतरं पातु सिद्धिबुद्धिविनायकः ॥ २६ ॥ सर्व
सिद्धिप्रदं देवि कवचमृद्धिसिद्धिदम् ॥ एकांते प्र
जपेन्मंत्रं कवचं युक्तिसंयुतम् ॥ २७ ॥ इदं रह
स्यं कवचमुच्छिष्टगणनायकम् ॥ सर्ववर्मसु देवे
शि इदं कवचनायकम् ॥ २८ ॥ एतत्कवचमाहा
त्म्यं वर्णितुं नैव शक्यते ॥ धर्मार्थकाममोक्षा

दिनानाफलप्रदं नृणाम् ॥ २९ ॥ शिवपुत्रः सदा पातु पातु मां च सुरार्चितः॥गजाननः सदा पातु गणराजश्च पातु माम् ॥ ३० ॥ सदा शक्तिरतः पातु पातु मां कामविह्वलः ॥ सर्वाभरणभूषाढ्यः पातु मां सिंदुरार्चितः ॥ ३१ ॥ पंचमोदकरः पातु पातु मां पार्वतीसुतः ॥ पाशांकुशधरः पातु पातु मां च धनेश्वरः ॥३२॥ गदाधरः सदा पातु पातु मां काममोहितः ॥ नग्ननारीरतः पातु पातु मां च गणेश्वरः ॥३३॥ अक्षय्यवरदः पातु शक्तियुक्तः

सदावतु।भालचंद्रः सदा पातु नानारत्नविभूषितः
मदाघूर्णितलोचनः ॥
॥३४॥उच्छिष्टगणनाथश्च मदाघूर्णितलोचनः ॥
नारीयोनिरसास्वादः पातु मां गजकर्णकः॥३५॥
प्रसन्नवदनः पातु पातु मां भगवल्लभः ॥ जटा
धरः सदा पातु पातु मां च किरीटधृक् ॥३६॥ प
द्मासनस्थितः पातु रक्तवर्णश्च पातु माम्॥नग्नसा
मपदोन्मत्तः पातु मां गणदैवतः ॥३७॥ वामांगे
सुंदरीयुक्तः पातु मां मन्मथप्रभुः ॥ क्षेत्रप्रव
सितः पातु पातु मां श्रुतिपाठकः ॥३८॥ भूषणा

ढ्यस्तु मां पातु नानाभोगसमन्वितः ॥ स्मिता
ननः सदा पातु श्रीगणेशकुलान्वितः ॥३९॥ श्री
रक्तचंदनमयः सुलक्षणगणेश्वरः ॥ श्वेतार्कगण
नाथश्च हरिद्रागणनायकः ॥४०॥ पारिभद्रगणेश
श्च पातु सप्तगणेश्वरः ॥ प्रवालकगणाध्यक्षो गज
दंतो गणेश्वरः ॥ ४१ ॥ हरबीजगणेशश्च भद्रा
क्षगणनायकः ॥ दिव्यौषधिसमुद्भूतो गणेश
श्चिंतितप्रदः ॥ ४२ ॥ लवणस्य गणाध्यक्षो मृत्ति
कागणनायकः ॥ तंडुलाक्षगणाध्यक्षो गोमयस्य

गणेश्वरः॥४३॥स्फटिकाक्षगणाध्यक्षो रुद्राक्षगण
दैवतः ॥ नवरत्नगणेशश्च आदिदेवो गणेश्वरः
॥४४॥पंचाननश्चतुर्वक्त्रः षडाननगणेश्वरः ॥ मयू
रवाहनः पातु पातु मां मूषकासनः ॥४५॥ पातु
मां देवदेवेशः पातु मामृषिपूजितः॥पातु मां सर्व
दा देवो देवदानवपूजितः ॥४६॥ त्रैलोक्यपूजितो
देवः पातु मां च विभुः प्रभुः॥रंगस्थं च सदा पातु
सागरस्थं सदाऽवतु ॥ ४७ ॥ भूमिस्थं च सदा
पातु पातालस्थं च पातु माम् ॥ अंतरिक्षे सदा

पातु आकाशस्थं सदावतु ॥४८॥चतुष्पथे सदा
पातु त्रिपथस्थं च पातु माम् ॥ बिल्वस्थं च
वनस्थं च पातु मां सर्वतः स्थितम् ॥४९॥ राजद्वा
रस्थितं पातु पातु मां शीघ्रसिद्धिदः ॥ भवानी
पूजितः पातु ब्रह्मविष्णुशिवार्चितः ॥५०॥ इदं तु
कवचं देवि पठनात्सर्वसिद्धिदम् ॥ उच्छिष्टगण
नाथस्य समंत्रं कवचं परम् ॥५१॥ स्मरणाद्भू
पतित्वं च लभते सांगतां ध्रुवम् ॥ वाचः सिद्धि
करं शीघ्रं परसैन्यविदारणम् ॥५२॥ प्रातर्मध्या

त्सायाह्ने दिवा रात्रौ पठेन्नरः ॥ चतुर्थ्यां दिवसे
रात्रौ पूजने मानदायकम् ॥५३॥ सर्वसौभाग्यदं
शीघ्रं दारिद्र्यार्णवघातकम् ॥ सुदारसुप्रजासौ
ख्यं सर्वसिद्धिकरं नृणाम् ॥५४॥ जलेऽनलेऽनिलेऽ
रण्ये सिंधुतीरे सरित्तटे ॥ श्मशाने दूरदेशे
च रणे पर्वतगह्वरे॥५५॥राजद्वारे भये घोरे निर्भ
यो जायते ध्रुवम् ॥ सागरे च महाशीते दुर्भिक्षे
दुष्टसंकटे ॥५६॥ भूतप्रेतपिशाचादियक्षराक्षसजे
भये ॥ राक्षसीयाक्षिणीक्रूरशाकिनीडाकिनीभये

॥ ५७ ॥ राजमृत्युहरं देवि कवचं कामधेनुवत् ॥
अनंतफलदं देवि तथाऽमोघं च पार्वति ॥५८॥
कवचेन विना मंत्रं यो [1]जपेद्गणनायकम् ॥
इह जन्मनि पापिष्ठो जन्मांते मूषको भवेत्
॥ ५९ ॥ इति परमरहस्यं देवदेवार्चितस्य कव
चमुदितमेतत्पार्वतीशेन देव्यै।पठति स लभते वै
भक्तितो भक्तवर्यः प्रचुरसकलसौख्यं शक्तिपुत्रप्र
सादात् ॥ ६० ॥ इति श्रीरुद्रयामलतंत्रे उमाम

---

१ विश्वसारतन्त्रे इति पुस्तकान्तरे पा० ।

हेश्वरसंवाद श्रीमदुच्छिष्टगणपतिकवचनिरूपणं नाम तृतीयं रत्नं समाप्तम् ॥ ३ ॥ अथ श्रीमदुच्छिष्टगणपतिसहस्रनामस्तोत्रम् ॥ उक्तं च रुद्रयामलतंत्रे ॥ श्रीभैरव उवाच ॥ शृणु देवि रहस्यं मे यत्पुरा सूचितं मया ॥ तव भक्त्या गणेशस्य वक्ष्ये नामसहस्रकम् ॥ १ ॥ श्रीदेव्युवाच ॥ ॐ भगवन्गणनाथस्य उच्छिष्टस्य महात्मनः ॥ श्रोतुं नामसहस्रं मे हृदयं प्रोत्सुकायते ॥ २ ॥ श्रीभैरव उवाच ॥ प्राङ्मुखे त्रिपुरानाथे

जाता विघ्नकुलाः शिवे ॥ मोहने मुच्यते चेतस्तैः सर्वैर्बलदर्पितैः ॥ ३ ॥ तदा प्रभुं गणाध्यक्षं स्तुत्वा नामसहस्रकैः ॥ विघ्ना दरात्पलायंते कालरुद्रादिव प्रजाः ॥ ४॥ तस्यानुग्रहतो देवि जातोऽहं त्रिपुरांतकः ॥ तमद्यापि गणेशानं स्तौमि नामसहस्रकैः ॥ ५ ॥ तदद्य तव भक्त्याहं साधकानां हिताय च ॥ महागणपतेर्वक्ष्ये दिव्यं नामसहस्रकम् ॥ ६ ॥ ॐ अस्य श्रीमदुच्छिष्ट गणेशसहस्रनामस्तोत्रमंत्रस्य श्रीभैरव ऋषिः ।

गायत्री छंदः । श्रीमहागणपतिर्देवता । गँ बी
जम् । ह्रीं शक्तिः। कुरुकुरु कीलकम्। मम धर्मा
र्थकाममोक्षार्थे जपे विनियोगः ॥ " ॐ ह्रीं श्रीं
क्लीं श्रीगणाध्यक्षो ग्लौं गँ गणपतिर्गुणी ॥ गु
णाढ्यो निर्गुणो गोप्ता गजवक्त्रो विभावसुः
॥ ७ ॥ विश्वेश्वरो विभादीप्तो दीपनो धी
वरो धनी ॥ सदा शांतो जगत्त्राता विश्वा
वर्तो विभाकरः ॥ ८ ॥ विश्रंभी विजयो वैद्यो वा

१ गणाद्यः—इ० पा० । २ विष्वक्सेनः—इ० पा० । ३ विस्तंभी—इ० पा० ।

रांनिधिरनुत्तमः ॥ अणिमाविभवः श्रेष्ठो ज्येष्ठो
गाथाप्रियो गुरुः ॥९॥ सृष्टिकर्ता जगद्धर्ता विश्व
भर्ता जगन्निधिः ॥ पतिः पीतविभूषांको रक्ताक्षो
लोहितांबरः ॥१०॥ विरूपाक्षो विमानस्थो विन
यः सदयः सुखी ॥ सुरूपः सात्त्विकः सत्यः
शुद्धः शंकरनंदनः ॥ ११ ॥ नंदीश्वरो जयानंदी
वंद्यः स्तुत्यो विचक्षणः॥दैत्यमर्द्दी सदाक्षीबो म
दिरारुणलोचनः ॥ १२ ॥ सारात्मा विश्वसारश्च

१ अणीयान्-इ० पा० । २ रक्तास्यः-इ० पा० । ३ सात्वतः-इ० पा० ।
४ विश्वस्मिन्सर्वस्मिन्सारः श्रेष्ठः स्थिरांश इत्यर्थः ।

विश्वंसारो[1] विलेपनः ॥ परं ब्रह्म परं ज्योतिः साक्षी त्र्यक्षो विकत्थनः ॥ १३ ॥ विश्वेश्वरो वीरहर्ता[2] सौभाग्यो भाग्यवर्द्धनः ॥ भृंगिरीटी भृंगमाली भृंगकूजितनादितः ॥ १४ ॥ विनर्तको[3] विनीतोऽपि विनतानंदनार्चितः ॥ वैनतेयो विनम्राङ्गो विश्वनायकनायकः ॥ १५ ॥ विराटको विराटश्च विदग्धो विधुरात्मभूः ॥

---

१ विश्वं सर्वं सारः अंशो यस्य सः—यदंशभूतं सर्वं जगदित्यर्थः । 'सर्वंजगदिदं त्वत्तोजायते' इति श्रुते.। इति विग्रहभेदात्—द्वयोरेकरूपयोर्नास्त्योरर्थौ विज्ञेयः ।
२ वीरेश्वरः—इ० पा० । ३ विवर्तकः—इ० पा० ।

पुष्पदंतः पुष्पहारी पुष्पमालाविभूषणः ॥ १६ ॥
पुष्पेषुमथनः पुष्टो विवर्तः कर्तरीकरः ॥ अन्त्यो
ऽन्तकाश्चित्तगणश्चित्ताचिन्तापहारकः ॥ १७ ॥
अचिन्त्योऽचिन्त्यरूपश्च चन्दनाकुलमुण्डकः ।
लोहितो लिपितो लुप्तो लोहिताक्षो विलोभकः
॥ १८ ॥ लब्धाशयो लोभरतो लोभदोऽलंघ्यगर्ध
कः॥सुन्दरः सुन्दरीपुत्रः समस्तासुरघातनः॥१९॥
नूपुराढ्यो विभवेन्द्रो नरनारायणो रविः॥विचारो
वान्तदो वाग्मी वितर्की विजयीश्वरः ॥ २० ॥

सुप्तो बुद्धः सदारूपः सुखदः सुखसेवितः ॥ वि
कर्तनो वियच्चारी विनटो नटनर्तकः ॥ २१ ॥ नटो
नाट्यप्रियो नादोऽनन्तोऽनन्तगुणात्मकः॥ गङ्गा
जलपानप्रियो गङ्गातीरविहारकृत्॥ २२ ॥ गङ्गा
प्रियो गङ्गजश्च वाहनादिपुरःसरः ॥ गंधमादन
संवासो गंधमादनकेलिकृत् ॥ २३ ॥ गन्धानुलि
प्तपूर्वाङ्गः सर्वदेवस्मरः सदा ॥ गणगन्धर्वराजेशो
गणगन्धर्वसेवितः ॥ २४ ॥ गन्धर्वपूजितो नित्यं
सर्वरोगविनाशकः ॥ गन्धर्वगणसंसेव्यो गन्धर्वव

रदायकः ॥२५॥ गन्धर्वौ गन्धमातङ्गो गन्धर्वकु
लदैवत ॥ गंधर्वगर्वसंवेगो गंधर्ववरदायकः॥२६॥
गन्धर्वप्रबलार्तिघ्नो गंधर्वगणसंयुतः ॥ गंधर्वादिगु
णानंदो नंदोनंतगुणात्मकः ॥ २७ ॥ विश्वमूर्ति
र्विश्वधाता विनतास्यो विनर्तकः ॥ करालः काम
दः कांतः कमनीयः कलानिधिः ॥ २८ ॥ कारु
ण्यरूपः कुटिलः कुलाचारी कुलेश्वरः ॥ विक
रालो रणश्रेष्ठः संहारो हारभूषणः ॥ २९ ॥ उरुर

१ विश्वसूर्विश्वधाती च–इ० पा०।

न्त्यमुखो रक्तो देवतादयितौरसः ॥ महाकालो
महादंष्ट्रो महोरगभयानकः ॥ ३० ॥ उन्मत्तरूपः
कालाग्निरग्निसूर्येन्दुलोचनः ॥ सितास्यः सितमा
ल्यश्च सितदन्तः सितांशुमान् ॥ ३१ ॥ असिता
त्मा भैरवेशो भाग्यवान्भगवान्भवः ॥ गर्भात्मजो
भगावासो भगदो भगवर्द्धनः ॥ ३२ ॥ शुभंकरः
शुचिः शांतः श्रेष्ठः श्रव्यः शचीपतिः ॥ वेदाद्यो
वेदकर्ता च वेदवेद्यः सनातनः ॥ ३३ ॥ विद्याप्रदो

१ भगः—इ० पा० ।

वेदरसो वैदिको वेदपारगः ॥ वेदध्वनिरतो वीरो वेदविद्यागमोर्थवित् ॥२४॥ तत्त्वज्ञः सर्वगः साधुः सदयः सदसन्मयः॥ शिवंकरः शिवसुतः शिवानंद विवर्द्धनः ॥ २५ ॥ शैत्यः[1] श्वेतः शतमुखी मुग्धो मोदकभूषणः[2] ॥ देवो दिनकरो धीरो धृतिमान्द्यु तिमान्धवः ॥ २६ ॥ शुद्धात्मा शुद्धमतिमाञ्छुद्ध दीप्तिः शुचिव्रतः ॥ शरण्यः शौनकः शूरः शरदं[3] भोजधारकः॥२७॥ दारकः शिखिवाहेष्टः सितः[4]

---

१ सैन्यः—इ० पा० । २ मोदकभंजनः—इ० पा० । ३ शब्ददंभी जठोरकः—इ० पा० । ४ शीतः—इ० पा० ।

स.

शंकरवल्लभः ॥ शंकरो निर्भयो नित्यो लयकृल्ल
स्यतत्परः ॥३८॥ लूतो लीलारसोल्लासी विलासी
विभ्रमो भ्रमः ॥ भ्रमणः शशिभृत्सूर्यः शनिर्धर
णिनंदनः ॥ ३९ ॥ बुधो विबुधसेव्यश्च बुधराजो
बलंधरः ॥ जीवो जीवप्रदो जेता स्तुत्यो नित्यो
रतिप्रियः ॥ ४० जनको जनमार्गज्ञो जनरक्षणत
त्परः ॥ जनानंदप्रदाता च जनकाह्लादकार
कः ॥ ४१ ॥ विबुधो बुधमान्यश्च जैनमार्गनिवर्त
कः ॥ गच्छो गणपतिर्गच्छनायको गच्छगर्वह॥

॥४२॥गच्छराजोथ गच्छेशो गच्छराजनमस्कृतः ॥ गच्छप्रियो गच्छगुरुर्गच्छत्राकृद्यमातुरः ॥ ४३ ॥ गच्छप्रभुर्गच्छचरो गच्छप्रियकृतोद्यमः ॥ गच्छगीतगुणो गर्तो मर्यादाप्रतिपालकः ॥४४॥गीर्वाणागमसारस्यगर्भो गीर्वाणदेवता॥गौरीसुतो गुरुवरो गौराङ्गो गणपूजितः ॥४५॥परंपदं परंधाम परमात्मा कविः कुंजः ॥ राहुर्दैत्यशिरश्छेदी केतुः कनककुण्डलः ॥ ४६ ॥ ग्रहेन्द्रो ग्रा

१ कुः भूमिः—भूच्छायाशब्देन बोध्या तस्यां जातः—छायापुत्रः शनिरित्यर्थः।एवं चात्र कुजशब्देन छायापुत्रः शनिर्बोध्यः।

हितो ग्राह्योऽग्रणीर्घुर्घुर्नादितः ॥ पर्जन्यः पीवरः स.
पत्री पीनवक्षाः पराक्रमी ॥ ४७ ॥ वनेचरो वनप
तिर्वनवासी स्मरोपमः ॥ पुण्यः पूतः पवित्रश्च
परात्मा पूर्णविग्रहः ॥ ४८ ॥ पूर्णेन्दुसुकलाकारो
मंत्रपूर्णमनोरथः ॥ युगात्मा युगकृद्यज्वा याज्ञि
को यज्ञवत्सलः ॥ ४९ ॥ यशस्वी यजमानेष्टो
वज्रभृद्वज्रपञ्जरः ॥ मणिभद्रो मणिमयो मान्यो
मीनध्वजाश्रितः ॥ ५० ॥ मीनध्वजो मनोहारी
योगिनां योगवर्धनः ॥ द्रष्टा स्रष्टा तपस्वी च विग्रही

तापसप्रियः ॥ ५१ ॥ तपोमयस्तपोमूर्तिस्तपनश्च
तपोधनः ॥ संपत्तिसदनाकारः संपत्तिसुखदायकः
॥ ५२ ॥ संपत्तिसुखकर्ता च संपत्तिसुभगाननः ॥
संपत्तिशुभदो नित्यसंपत्तिश्च यशोधनः ॥ ५३ ॥
रुचको मे[1]चकस्तुष्टः प्रभुस्तोमरघातकः ॥ दंडी
चंडांशुरव्यक्तः कमंडलुधरोऽनघः ॥ ५४ ॥कामी
कर्मरतः कालः कोलः क्रंदितदिक्तटः ॥ भ्रामको
जातिपूज्यश्च जाड्यहा जडसूदनः ॥ ५५ ॥ जा

१ रोचको हृष्टः इ०पा० ।

लंधरो जगद्वा[1]सी हास्यकृद्दहनो गुहः ॥ हविष्मा
न्हव्यवाहाक्षो हाटको हाटकांगदः ॥ ५६ ॥ सुमे
रुर्हिमवान्होता हरपुत्रो ह[2]लंकषः॥हालाप्रियो हृदा
शांतः कांताहृदयपोषणः ॥ ५७॥ शोषणःक्लेशहा
क्रूरः कठोरःकठिनाकृतिः॥कुबेरो धीमयो ध्याता
ध्येयो धीमान्दयानिधिः ॥५८॥ दविष्ठो दमनो हृ
ष्टो दाता त्राता पिता समः॥निर्गतो नैगमो गम्यो
निर्जयो जटिलोऽजरः ॥५९॥जनजीवो जितराति

१ जगद्वार्षी–इ० पा० । २ हलांकपः–इ० पा ।

जगद्व्यापी जगन्मयः ॥ चामीकरनिभो नाभ्यो नलिनायतलोचनः ॥६० ॥ रोचनो मोचको मंत्री मंत्रकोटिसमाश्रितः॥पंचभूतात्मकः पंचसायकः पंचवक्त्रकः॥ ६१ ॥ पंचमः पाश्चिमः पूर्वः पूर्णः कीर्णालकः कुणिः ॥कठोरहृदयो ग्रीवालंकृतो ललिताशयः॥६२॥लोलचित्तो बृहन्नासो मासपक्षर्तुरूपवान् ॥ ध्रुवो द्रुतगतिर्बंधो धर्मी नाकिप्रियोऽनलः ॥ ६३ ॥ अंगुल्यग्रस्थभुवनो भुवनैकमला

१ अगस्त्यग्रस्तभुवनः—इ० पा० ।

पहः ॥ सागरः स्वर्गतिः स्वक्षः सानंदः साधु
पूजितः ॥ ६४ ॥ सतीपतिः समरसः सनकः
सरलः सरः ॥ सुरप्रियो वसुमतिर्वासवो वसुपूजि
तः ॥ ६५ ॥ वित्तदो वित्तनाथश्च धनिनां धनदाय
कः ॥ राजीवनयनः स्मार्तः स्मृतिदः कृत्तिका
वरः ॥ ६६ ॥ आश्विनोऽश्वमुखः शुभ्रो भरणो
भरणीप्रियः ॥ कृत्तिकासनकः कोलो रोहिणी
रमणोपमः ॥ ६७ ॥ रौहिणेयप्रेमकारी रोहि

१ स्मृतिहा–इ० पा० । २ रोहिणीरोहिणो यमः–इ० पा० ।

णीमोहनो मृगः ॥ मृगराजो मृगशिरा माधवो
मधुरध्वनिः ॥ ६८ ॥ आर्द्राननो महाबुद्धिर्महो
रगविभूषणः ॥ भ्रूक्षेपदत्तविभवो भ्रूकरालः
पुनर्मयः ॥ ६९ ॥ पुनर्देवः पुनर्जेता पुन
र्जीवः पुनर्वसुः ॥ तिमिरस्तिमिकेतुश्च ति
तिषासुरघातनः ॥ ७० ॥ तिष्यस्तुलाधरो
जृंभो विश्लेषाश्लेषदानराट् ॥ मानदो माधवो
माधो वाचालो मघवोपमः ॥ ७१ ॥ मघ्यो मघा

---

१ तित्तिरः-इ० पा० । २ जम्भः-इ० पा० ।३ विश्लेषाश्लेष दणराट्-इ० पा० ।

प्रियो मेघो महाशुंडो महाभुजः ॥ पूर्वाफाल्गु
निकः स्फीतः[1] फल्गुरुत्तरफाल्गुनः ॥ ७२ ॥
फेनिलो ब्रह्मदो ब्रह्मा सप्ततंतुसमाश्रयः ॥ घोणा
हस्तश्चतुर्हस्तो हस्तिवक्त्रो हलायुधः ॥७३॥ चित्रां
बरोऽर्चितपदः स्वस्तिदः स्वस्तिविग्रहः ॥ विशा
खः शिखिसेव्यश्च शिखिध्वजसहोदरः ॥ ७४ ॥
अणुरेणूत्करः स्फारोरूरुरेणुसुतो नरः ॥ अनुरा
धाप्रियो राधः श्रीमाञ्छुक्लः शुचिस्मितः ॥७५॥

---

१ प्रीतः—इ० पा० ।

ज्येष्ठः श्रेष्ठार्चितपदो मूलं च त्रिजगद्गुरुः ॥
शुचिश्चैव पूर्वाषाढश्चोत्तराषाढ ईश्वरः ॥ ७६ ॥
श्रव्योभिजिदनंतात्मा श्रवो वेपितदानवः ॥ श्राव
णः श्रवणः श्रोता धनी धन्यो धनिष्ठकः ॥ ७७ ॥
शांतातपः शातकुंभः शरज्ज्योतिः शताभिषक् ॥
पूर्वाभाद्रपदो भद्रश्चोत्तराभाद्रपादितः ॥ ७८ ॥
रेणुकातनयो रामो रेवतीरमणो रमी ॥ आश्व
युक्कार्तिकेयेष्टो मार्गशीर्षो मृगोत्तमः ॥ ७९ ॥

१ धनेष्टुकः सदातीवः शीतकुंभः शरद्द्युतिः—इ० पा० ।

पौषेश्वरः फाल्गुनात्मा वसंतश्चैत्रको मधुः ॥ राज्यदोभिजिदात्मीयस्तारेशस्तारकद्युतिः ॥ ॥ ८० ॥ प्रतीतः प्रोर्जितः प्रीतः परमः परमो हितः ॥ परहा पंचभूः पंचवायुपूज्यः परिग्रहः[1] ॥ ८१ ॥ पुराणागमविद्योगी महिषो रासभोऽग्रजः ॥ ग्रहो मेषो वृषो मंदो मन्मथो मिथुनाकृतिः[2] ॥ ८२ ॥ कल्पभृत्[3]कटको दीपो मर्कटः कर्कटो घृणिः॥ कुक्कुटो वनजो हंसः परहंसः सृगा

१परोमहः–इ० परीसहः–इ०च पा० । २ मिशुनार्चितः–इ० पा० । ३ कल्पभृत्कं टकटकोदीपो मर्कटसत्प्रभुः।कर्कटो घृणिकुक्कुटो वनजो हंसगो हसः–इ०पा० ।

लकः॥८३॥ सिंहः सिंहासनाभूष्यो मद्गुर्मूषकवाहनः ॥ पुत्रदो[1] नरकत्राता कन्याप्रीतः कुलोद्वहः ॥ ८४ ॥ अतुल्यरूपो बलदस्तुल्यभृत्तुल्यसाक्षिकः ॥ अलिश्चापधरो धन्वी कच्छपो मकरो मणिः ॥ ८५ ॥ कुंभभृत्कलशः कुब्जो मीनमांससुतर्पितः ॥ राशितारा ग्रहमयस्तिथिरूपो जगद्विभुः ॥ ८६ ॥ प्रतापी प्रतिपत्प्रेयोऽद्वितीयोऽद्वैतनिश्चितः ॥ त्रिरूपश्च तृतीयाग्निस्त्रयीरू

१ कन्याकलाद्वतीपुत्रः—इ० पा० ।

ग्रस्त्रयीतनुः ॥८७॥ चतुर्थीवल्लभो देवो परागः पं
चमीश्वरः ॥ षड्रसास्वादविज्ञानः षष्ठी षष्ठिकव
त्सलः ॥ ८८ ॥ सप्तार्णवगतिः सारः सप्तमीश्वर
रोहितः ॥ अष्टमीनंदनोत्तंसो नवमीभक्तिभावितः
॥ ८९ ॥ दशदिक्पतिपूज्यश्च दशमीद्रुहिणो
द्भुतः ॥ एकादशात्मगणपो द्वादशीयुगचर्चितः
॥ ९० ॥ त्रयोदशमणिस्तुत्यश्चतुर्दशस्वराप्रि
यः ॥ चतुर्दशेंद्रसंस्तुत्यः पूर्णिमानंदविग्रहः
॥ ९१ ॥ दर्शादर्शो दर्शनश्च वानप्रस्थो महे

१ दर्शगश्च-इ० पा०।

श्वरः ॥ मौर्वी मधुरवाङ्मूलमूर्तिमान्मेघवाहनः
॥ १२ ॥ महागजो जितक्रोधो जितशत्रुर्जयाश्र
यः ॥ रौद्रो रुद्रप्रियो रुद्रो रुद्रपुत्रोऽघनाशनः
॥ १३ ॥ भवप्रियो भवानीष्टो भारभृद्भूतभावनः
गांधर्वकुशलोऽकुंठो वैकुंठो विष्टरश्रवाः ॥ १४ ॥
वृत्रहा[1] विघ्नहा सीरः समस्तदुःखतापहा ॥ मंजुरो
मार्जरो मत्तो दुर्गापुत्रो दुरालसः ॥ १५ ॥ अनंत
चित्सुधाधारो वीरो वीर्यैकसाधकः ॥ भास्वन्मुकु

१ बृहत्कायो विघ्नहरः—इ०पा० ।

टमाणिक्यः कूजत्किंकिणिजालकः ॥ १६ ॥
शुंडाधारी तुंडचलः कुंडली मुंडमालकः ॥ पद्मा
क्षः पद्महस्तश्च पद्मनाभसमर्चितः ॥ १७ ॥ उद्धृ
ताधरदंताढ्यो मालाभूषणभूषितः ॥ मोरदो वार
णो लोलश्रवणः शूर्पकर्णकः ॥ १८ ॥ बृहदुल्ला
सनासाढ्यो व्योमत्रैलोक्यमंडलः ॥ रत्नमंड
लमध्यस्थः कृशानुरूपशीलकः ॥ १९ ॥ बृह
त्कर्णाञ्चलोद्भूतवायुवीजितदिक्तटः ॥ बृहदास्य

१ नारदः–इ० पा०। २ व्योममण्डलमण्डितः–इ० पा०। ३ ब्रह्मामण्डलसंघातः कृतानुग्रहजीवकः–इ०, रत्नमण्डलआसीनः–इ० च पा०। ४–दिक्पटः–इ० पा०।

स्वाक्रांतभीतब्रह्मांडभांडकः ॥ १०० ॥ बृहत्पा
दसमाक्रांतसप्तपातालदीपितः ॥ बृहद्दंतकृता
त्युग्ररणानंदरसालसः ॥ १०१ ॥ बृहद्धस्तधृ
ताशेषायुधनिर्जितदानवः ॥ स्फुरत्सिंदूरवदनः
स्फुरत्तेजोऽग्निलोचनः ॥ १०२ ॥ उद्दीपितमणि
स्फूर्जन्नूपुरध्वनिनादितः ॥ चलत्तोयप्रवाहाढ्यो
नदीजलकणाकरः ॥ १०३ ॥ भ्रमत्कुंजरसंघा
तवंदितांघ्रिसरोरुहः ॥ ब्रह्माच्युतमहारुद्रपुरः
सरसुरार्चितः ॥ १०४ ॥ अशेषशेषप्रभृतिव्या

लजालोपसेवितः ॥ गर्जत्पंचाननारावव्योमा
काशधरातलः ॥ १०५ ॥ हाहाहूहूगतात्युग्रस्वर
विभ्रांतमानसः ॥ पंचाशद्वर्णबीजाख्यमंत्रमंत्रि
तविग्रहः ॥ १०६ ॥ वेदांतशास्त्रपीयूषधाराप्ला
वितभूतलः ॥ शंखध्वनिसमाक्रांतपातालादिनभ
स्तलः ॥ १०७ ॥ चिंतामणिर्महामल्लो बल्लह
स्तो बलिः कविः ॥ कृतत्रेतायुगोल्लासभास
मानजगत्त्रयः ॥ १०८ ॥ द्वापरः परलोकैकः

१–प्रसादितधरातलः–इ० पा० ।

कर्मध्वांतसुधाकरः ॥ सुधासिक्तवपुर्व्यासो ब्र
ह्मांडादिकबाहुकः ॥१०९॥ अकारादिक्षकारांतव
र्णपंक्तिसमुज्ज्वलः ॥ अकाराकारप्रोद्गीतताननना
दनिनादितः ॥ ११० ॥ इकारेकारमंत्राढ्य
मालाभ्रमणलालसः॥ उकारोकारप्रोद्गारिघोरना
गोपवीतकः ॥ १११ ॥ ऋवर्णांकितऋकारि
पद्मद्वयसमुज्ज्वलः ॥ ऌकारयुतॡकारशंख
पूर्णदिगंतरः ॥ ११२ ॥ एकारैकारगिरिजास्तन
पानविचक्षणः ॥ ओकारौकारविश्वादिकृतसृ

ष्ट्रिक्रमालसः ॥ ११३ ॥ अंअःवर्णत्रयीन्यास
पादादिशीर्षमंडलः ॥ कर्णतालकृतात्युच्चैर्वायुवी
जितनिर्जरः ॥ ११४ ॥ खगेशध्वजरत्नांक
किरीटारुणपादकः ॥ गार्वितशेषगंधर्वगीततत्प
रश्रोत्रकः ॥ ११५ ॥ घनवाहनवागीशपुरःसर
सुरार्चितः ॥ ङवर्णामृतधाराढ्यशोभमानैकदंत
कः ॥ ११६ ॥ चंद्रकुंकुमजंबालालिप्तसिंदूरविग्र
हः ॥ छत्रचामररत्नाढ्यमुकुटालंकृताननः ॥
॥११७॥ जटाबद्धमहानर्घमणिपंक्तिविराजितः ॥

झंकारिमधुपव्रातगाननादविनादितः ॥ ११८ ॥
ञवर्णकृतसंहारदैत्यासृक्पर्णमुद्गरः ॥ टकारा
ख्यफलास्वादवेपिताशेषमूर्धजः ॥ ११९ ॥ ठका
राद्यडकारांकढकारानन्दतोषितः ॥ णवर्णामृत
पीयूषधाराधारसुधाकरः ॥ १२० ॥ ताम्रासिन्दूर
पूजाढ्यललाटफलकच्छविः ॥ थकारधनपंक्त्या
तिसंतोषितद्विजव्रजः ॥ १२१ ॥ दयामृतहृदं
भोजधृतत्रैलोक्यमंडलः ॥ धनदादिमहायक्षसं
सेवितपदांबुजः ॥ १२२ ॥ नमिताशेषदेवौघकि

रीटमणिरंजितः ॥ परवर्गापवर्गादिभोगच्छे
दनदक्षकः ॥ १२३ ॥ फणिचक्रसमाक्रांतगल
मंडलमंडितः ॥ बद्धभ्रूयुगभीमोग्रसंतर्जितसुरासु
रः॥१२४॥भवानीहृदयानंदवर्द्धनैकनिशाकरः ॥
मदिराकलशस्फीतकरालैककरांबुजः ॥ १२५ ॥
यज्ञांतरायसंघातसज्जीकृतवरायुधः ॥ रत्नाकर
सुताकांतिक्रांतिः कीर्तिविवर्धनः ॥ १२६ ॥ लंबो
दरमहाभीमवपुर्दीप्तकृतासुरः ॥ वरुणादिदिगीशा

१ मल्लमण्डलमंडितः—इ० पा० ।

नस्वार्चितार्चनचर्चितः ॥ १२७ ॥ शंकरैकप्रिय
प्रेमनयनानंदवर्द्धनः ॥ षोडशस्वरितालापगीत
गानविचक्षणः ॥ १२८ ॥ समस्तदुर्गतिसरिन्ना
थोत्तारणकोडुपः ॥ हरादिब्रह्मवैकुंठब्रह्मगीता
दिपाठकः ॥१२९॥क्षमापूरितहृत्पद्मसंरक्षितचरा
चरः ॥ तारांकमंत्रवर्णैकविग्रहोज्ज्वलविग्रहः
॥ १३० ॥ अकारादिक्षकारांतविद्याभूषितविग्र
हः ॥ ॐ श्रीविनायको ॐ ह्रीं विघ्नाध्यक्षो
गणाधिपः ॥ १३१ ॥ हेरंबो मोदकाहारो वक्रतुं

डो विधिः स्मृतः ॥वेदांतगीतो विद्यार्थिसिद्धमंत्रः षडक्षरः ॥१३२॥गणेशो वरदो देवो द्वादशाक्षर मंत्रितः ॥ सप्तकोटिमहामंत्रमंत्रिताशेषविग्रहः ॥ १३३ ॥ गांगेयो गणसेव्यश्च ॐ श्रीद्वैमातुरः शिवः॥ ॐ ह्रीं श्रीं क्लीं ग्लौं गँ देवो महागणपतिः प्रभुः ॥ १३४ ॥ इदं नामसहस्रं तु महागणपतेः स्मृतम् ॥ गुह्यं गोप्यतमं सिद्धं सर्वतंत्रेषु गोपित म् ॥ १३४॥ सर्वमंत्रमयं दिव्यं सर्वविघ्नविनाश

१ सर्वमंत्रविनायकम्-इ० पा० ।

नम् ॥ ग्रहतारामयं राशिवर्णपंक्तिसमन्वितम्
॥ १३६ ॥ सर्वविद्यामयं ब्रह्मसाधनं साधकप्रि
यम्॥गणेशस्य च सर्वस्वं रहस्यं त्रिदिवौकसाम्
॥ १३७ ॥ यथेष्टफलदं लोके मनोरथप्रपूरणम् ॥
अष्टसिद्धिमयं श्रेष्ठं साधकानांजयप्रदम्॥१३८॥
विनार्चनं विना होमं विना न्यासं विना जपम् ॥
अणिमाद्यष्टसिद्धीनां साधनं स्मृतिमात्रतः
॥ १३९ ॥ चतुर्थ्यामर्धरात्रे तु पठेन्मंत्री
चतुष्पथे ॥ लिखेद्भूर्जे महादेवि पुण्यं

नामसहस्रकम् ॥ १४० ॥ धारयेत्तं चतुर्दश्यां मध्याह्ने मूर्ध्नि वा भुजे ॥ योषिद्वामकरे चैव पुरुषो दक्षिणे भुजे ॥ १४१ ॥ स्तंभयेदपि ब्रह्माणं मोहयेदपि शंकरम् ॥ वशयेदपि त्रैलोक्यं मारयेदखिलान्रिपून् ॥ १४२ ॥ उच्चाटयेच्च गीर्वाणं शमयेच्च धनंजयम् ॥ वंध्या पुत्रं लभेच्छीघ्रं निर्धनो धनमाप्नुयात् ॥ १४३ ॥ नग्नः त्रिवारं यः पठेद्रात्रौ गणेशस्य पुरः शिवे ॥ भोगान्यथेप्सितान् शक्तियुतो देवि भुक्त्वा

॥ १४४॥प्रत्यक्षंवरदं पश्येद्गणेशं साधकोत्तमः॥
य इदं पठते नाम्नां सहस्रं भक्तिपूर्वकम् ॥ १४५ ॥
तस्य वित्तादिविभवो दारायुःसंपदः सदा ॥ रणे
राजभये द्यूते पठेन्नामसहस्रकम् ॥ १४६ ॥ सर्वत्र
जयमाप्नोति गणेशस्य प्रसादतः ॥ १४७ ॥
इतीदं पुण्यसर्वस्वं मंत्रनामसहस्रकम् ॥
महागणपतेः पुण्यं गोपनीयं स्वयोनिवत्
॥ १४८ ॥ इति श्रीरुद्रयामलतंत्रे श्रीमदुच्छि
ष्टगणेशसहस्रनामस्तोत्रनिरूपणंनाम चतुर्थ र

त्नम् ॥४॥ श्रीगणेशाय नमः ॥ अथ श्रीमदुच्छि
ष्टगणेशस्तवराजप्रारम्भः ॥ उक्तं च रुद्रयामले
॥ देव्युवाच ॥ पूजांते ह्यनया स्तुत्या स्तुवीत
गणनायकम् ॥ नमामि देवं सकलार्थदं तं
सुवर्णवर्णं भुजगोपवीतम् ॥ गजाननं भास्करमे
कदंतं लंबोदरं वारिभवासनं च ॥ १ ॥ केयूरिणं
हारकिरीटजुष्टं चतुर्भुजं पाशवराभयानि॥ सृणिं
वहन्तं गणपं त्रिनेत्रं सचामरस्त्रीयुगलेन युक्तम्
॥ २ ॥ षडक्षरात्मानमनल्पभूषं मुनीश्वरैर्भार्गव

पूर्वकैश्च ॥ संसेवितं देवमनाथकल्पं रूपं मनोज्ञं
शरणं प्रपद्ये ॥ ३ ॥ वेदांतवेद्यं जगतामधीशं
देवादिवंद्यं सुकृतैकगम्यम् ॥ स्तंबेरमास्यं नव
चन्द्रचूडं विनायकं तं शरणं प्रपद्ये ॥४॥भवाख्य
दावानलदह्यमानं भक्तं स्वकीयं परिषिंचते यः ॥
गंडस्रुतांभोभिरनन्यतुल्यं वंदे गणेशं च तमालनी
लम् ॥ ५ ॥ शिवस्य मौलाववलोक्य चन्द्रं सुशुं
डया मुग्धतया स्वकीयम् ॥ भग्नं विषाणं परि

१ तमोरिनन्नम्-इ०पा० ।

गणपोऽवतान्नः ॥ ६ ॥
भाव्य चित्ते आकृष्टचन्द्रो
पितुर्जटाजूटतटे विलोक्य भागीरथीं तत्र कुतूह
लेन ॥ विहर्तुकामः स महीध्रपुत्र्या निवारितः
पातु सदा गजास्यः ॥ ७ ॥ लम्बोदरो देवकुमा
रसंघैः क्रीडन्कुमारं जितवान्निजेन ॥ करेण
चोत्तोल्य ननर्त रम्यं दन्तावलास्यो भयतः स
पायात् ॥ ८ ॥ आगत्य चोच्चैर्हरिनाभिपद्मं
ददर्श तत्राशु करेण तच्च ॥ उद्धर्तुमिच्छन्विधि
चाटुवाक्यं[1] श्रुत्वा मुमोचावतु नो गणेशः ॥ ९ ॥

१ विधिवादवाक्यम्-इ० पा० ।

निरंतरं संस्कृतदानपट्टे लग्नां तु गुंजद्भ्रमरावलिं
वै ॥ तां श्रोत्रतालैरपसारयंतं स्मरेद्गजास्यं
निजहृत्सरोजे ॥ १० ॥ विश्वेशमौलिस्थितजह्नु
कन्याजलं गृहीत्वा निजपुष्करेण ॥ हरं सलीलं
पितरं स्वकीयं प्रपूजयन्हस्तिमुखः स पायात्
॥ ११ ॥ स्तंबेरमास्यं घुमृणांगरागं सिंदूरपूरारु
णकांतकुंभम् ॥ कुचन्दनालिप्तकरं गणेशं
ध्यायेत्स्वचित्ते सकलेष्टदं तम् ॥ १२ ॥ स

---

१ कुचंदनाश्लिष्टकरम्–इ०पा०।

भीष्ममातुर्निजपुष्करेण जलं समादाय कुचौ
स्वमातुः ॥ प्रक्षालयामास षडास्यपीतौ स्वार्थं
मुदेऽसौ कलभाननोऽस्तु ॥ १३ ॥ तं वामनांगं
शिशुभावमाप्तं केनापि सत्कारणतो धरि
त्र्याम् ॥ वक्तारमाद्यं निगमादिकानां लोकैक
वंद्यं प्रणमामि विघ्नम् [1] ॥ १४ ॥ आलिंगितं
चारुरुचा मृगाक्ष्या संभोगलोलं मदविह्वलांग
म् ॥ विघ्नौघविध्वंसनसक्तमेकं नमामि कांतं

१ विघ्नं—विघ्ननाशकमित्यर्थः ।

द्विरदाननं तम् ॥१५॥ हेरंब उद्यद्रविकोटिकांतः पञ्चाननेनाप्यवलंबितांसः ॥ मुनीन्सुरान्भक्त जनांश्च सर्वान्स पातु रथ्यासु सदा गजास्यः ॥१६॥ द्वैपायनोक्तं सुविचार्य येन स्वदंतकोट्या निखिलं लिखित्वा ॥ दत्तं पुराणं सुतमिंदुमौलेस्त मग्र्यरूपं मनसा स्मरामि ॥ १७ ॥ क्रीडाप्रवृत्ते जलधाविभास्ये वेलाजलेऽथांबुपतिः प्रभीतः ॥ विचिंत्य कस्येति सुरास्तदा तं विश्वेश्वरं वाग्भि राभिष्टुवंति ॥ १८ ॥ वाचां निमित्तं ह्यनिमित्तमा

द्यं पदं त्रिलोक्यां निखिलस्तुतीनाम् ॥ सर्वै
श्च वंद्यो न च तस्य वंद्यः स्थाणोः परं रूपम
सौ स पायात् ॥ १९ ॥ इमां स्तुतिं यः पठती
ह भक्त्या समाहितप्रीतिरतीव शुद्धः ॥ संसेव्य
ते चेंदिरया नितांतं दारिद्र्यसंघं स विदारये
न्नः ॥ २० ॥ इति श्रीरुद्रयामलतंत्रे हरगौरीसं
वादे श्रीमदुच्छिष्टगणेशस्तोत्रनिरूपणं नाम
पञ्चमं रत्नम् ॥ ५ ॥ ॥ इति श्रीमदुच्छिष्टगणप
तिपञ्चरत्नं संपूर्णम् ॥श्रीगणेशार्पणमस्तु॥ॐगं ॥

अथ श्रीबृहज्ज्योतिषार्णवान्तर्गतधर्मस्कन्धान्तःपात्युपासनास्तबके श्रीमदुच्छिष्टचाण्डालिन्युपासनाप्रारम्भः ॥ ॥ अथोच्छिष्टचांडाली मंत्राः ॥ उक्तं च तंत्रसारे ॥ तदुक्तं फेत्कारिण्याम् ॥ "उच्चार्योच्छिष्टशब्दं तु तथा चांडालिनीति च ॥ सुमुखीति ततो देवीं कीर्त्तयेत्तदनंतरम् ॥ १ ॥
महापिशाचिनीं पश्चाल्लज्जाबीजं ततः परम् ॥
नादबिंदुसमायुक्तं ठकारत्रितयं पुनः ॥ २ ॥
सविसर्गं महादेवि सर्वसिद्धिप्रदायकम् ॥" मंत्रा

तरम् ॥ तदुक्तं तंत्रांतरे ॥ "अथोच्छिष्टचांडा
लिमातंगीपदमीरयेत् ॥ ३ ॥ ततः सर्ववशं चांते
कारिहृद्वह्निवल्लभा ॥ एकोनविंशता वर्णैः क्वी
भीष्टकरा भवेति ॥ ४ ॥" मंत्रांतरं मंत्रदेवप्रका
शिकायाम् ॥ "वाग्भवं ऐं माया ह्रीं कामः क्लीं
सौः ऐं ज्येष्ठमातंगि नमामि उच्छिष्टचांडालिनि
त्रैलोक्यवशंकारि स्वाहा ॥" इति । इमां विद्यां
जपेद्देवि चापरा हुंसमाश्रिता ॥ इयं विद्या महा
विद्या सर्वपापापहारिणी ॥ ५ ॥ स्वर्गदा मोक्षदा

चैव राजसौभाग्यदायिका ॥ यां यां प्रार्थयते सिद्धिं हठात्तां तामवाप्नुयात् ॥ ६ ॥ विधानं च प्रवक्ष्यामि शृणु देवि वरानने ॥ भोजनानंतरं देवि विनैवाचमने कृते ॥ ७ ॥ बलिं दद्यात्प्रथमतो मूलमंत्रेण साधकः॥ततो मंत्रं जपेद्ध्यात्वा देवीं तामिष्टसिद्धये ॥ ८ ॥" बलिमप्युच्छिष्टेन ॥ तथा च--"न तिथिर्न च नक्षत्रं न चांगन्यासमेव च॥ नारिदोषो न वा विघ्नं नाशौचं नियमो न च ॥ ॥ ९ ॥ यस्य तिष्ठति मंत्रोऽयं न च विघ्नः स बा

ध्यते॥" ध्यानं तु—"शवोपरि समासीनां रक्तांबर
परिच्छदाम् ॥ १० ॥ रक्तालंकारसंयुक्तां गुंजाहा
रविभूषिताम् ॥ षोडशाब्दां च युवतीं पीनोन्नतप
योधराम् ॥ ११ ॥ कपालकर्त्तिकाहस्तां परज्यो
तिःस्वरूपिणीम् ॥ वामदक्षिणयोगेन ध्यायेन्मं
त्रविदुत्तमः ॥ १२ ॥ स्थंडिले च बलिं दत्त्वा
जपेत्तद्गतमानसः॥ उच्छिष्टेन च कर्त्तव्यो जपः
स्यात्सिद्धिमिच्छता ॥ १३ ॥ उच्छिष्टे जपमा

१ कर्त्तव्यः स्यादितिसंबन्धः ।

नस्यं जायंते सर्वसिद्धयः ॥ अपरं च प्रवक्ष्यामि
शृणु देवि फलप्रदम् ॥ १४ ॥ होमं च तर्पणं चै
व सर्वकामार्थसिद्धये ॥ स्थंडिले मंडलं कृत्वा
चतुरस्रं समंततः ॥१५॥ पूजयेन्मंडले देविं मूल
मंत्रेण साधकः ॥" ततो मूलमुच्चार्य ॐ मंडलाय
नमः इति मंत्रेण वह्निस्वरूपां देवतां ध्यात्वा हो
मयेत् ॥ तथा च "ततो देवीं समाधाय वह्निरूप
व्यवस्थिताम् ॥ देवीं ध्यात्वाऽऽचरेद्धोमं दधिसि
द्धान्नतंदुलैः ॥ १६ ॥ सहस्रमात्रहोमेन राजानं

वशमानयेत् ॥ मार्जारस्य तु मांसेन देव्या होमं
समाचरेत् ॥ १७ ॥ स प्राप्नोति परां विद्यां सर्व
शास्त्रवशीकृताम् ॥ कुर्याच्छागस्य मांसेन होमं
मधुसमन्वितम् ॥ १८ ॥ सहस्रैकविधानेन भवंति
कुलसिद्धयः॥विद्याकामश्चरेद्धोमं शर्करायुतपाय
सैः॥१९॥तस्य वै देवि सिद्धयन्ति सद्यो विद्याश्चतु
र्दश ॥ बिल्वपत्रैस्त्रिमध्वक्तैर्मासमेकं समाहितः
॥ २० ॥ वंध्यापि लभते पुत्रं चिरंजीविनमुत्त

१ होमं चरेदिति पाठः ।

मम् ॥ कर्कन्धूकुसुमं हुत्वा छागरक्तसमन्वित
म् ॥ २१ ॥ दुर्भगाया हठाद्देवि सौभाग्यं शुभदा
यकम् ॥ रजस्वलाया वस्त्रेण मधुना पायसेन च
॥२२॥ होमं कृत्वा महादेवि त्रैलोक्यं वशमानये
त्॥इत्येषा कथिता देवि सर्वपापप्रणाशिनी॥२३॥
मंत्रस्योच्चारणादेव सर्वपापप्रणाशिनी ॥उच्छिष्टे
दूषणं त्यक्त्वा सपवित्रो जपेन्मनुम् ॥२४॥" अत्र
यद्यपि पुरश्चरणं नोक्तं तथाप्यष्टसहस्र जपः
तद्दशांशेन होमादिकं च बोध्यम् ॥ यथा–"येषां

जपे च होमे च संख्या नोक्ता मनीषिभिः॥तेषाम
ष्टसहस्त्राणि संख्या स्याज्जपहोमयोः ॥२५॥"
इत्यभिधानादष्टोत्तरसहस्त्रमिति संप्रदायः ॥
आसां सिद्धविद्यत्वात्पुरश्चरणं नास्तीति निबंध
काराः ॥ अथ मंत्रकोशे-"ऐंनमः उच्छिष्ट
चांडालिमातांगि सर्ववशंकरि स्वाहा" ॥१॥ अस्य
मंत्रस्य मदनऋषिः गायत्री त्रिवृच्छंदः
देवी लघुश्यामा देवता ऐंबीजं स्वाहा शक्तिः
अभीष्टसिद्धयर्थे जपे विनियोगः ॥ ऐंरत्यै

नमो मूर्ध्नि । ह्रीं प्रीत्यै नमः पादयोः। ह्लीं द्रावण बाणाय नमः भ्रूमध्ये । द्रींशोषणबाणाय नमः मुखे । क्लींतापनबाणाय नमः हृदि । लूँमोहनबाणायं नमः गुह्ये । सः तापनबाणाय नमः पादयोः ॥ रामा ३ ग्नि ३ गुण ३ रामां ३ क १ नेत्र २ वर्णैर्मनूत्थितैः ॥ ङेन्नमोंऽताः कन्यकांता ब्राह्मयाद्या अष्टमातरः ॥ ऐं ब्रह्मकन्यकायै नमः । ॐ क्षाँ नमः ब्रह्मकन्यकायै नमः ॥ ॐ ऐं सिद्धकन्यकायै नमः॥अणिमादिन्यासः ॥

उर्वश्यादिन्यासः ॥ यक्षादिन्यासः ॥ क्लींयक्षकन्यायै नमः । ॐ अणिमाकन्यकायै नमः । ॐ महिमाकन्यकायै नमः । क्लींउर्वशीकन्यकायै नमः।पश्चान्मूलवर्णन्यासः ॥ ॐ ऐंनमः । ॐ नँनमः।ॐ मँनमः।ॐ उँनमः। ॐ छिँ नमः । ॐ ष्टूँ नमः । ॐ चाँनमः । इत्यादिन्यासानेवंविधान्कृत्वा मातंगीमासने स्मरेत् ॥ माणिक्याभरणान्वितां स्मितमुखीं नीलोत्पलाभांबरां रम्यालक्तकलिप्तपादकमलां नेत्रत्रयोल्लासिनीम् ॥वीणा

वादनतत्परां सुरनुतां कीरच्छदश्यामलां मातं
गीं शशिशेखरामनुभजे तांबूलपूर्णाननाम् ॥
॥ २६ ॥ एकलक्षजपः ॥ मधूकपुष्पैर्होमः ॥
मातंगीपीठे लघुश्यामापूजनम् ॥ ऐं शुकप्रियायै
विद्महे क्लीं कामेश्वरी धीमहि ॥ तन्नः श्यामा
प्रचोदयात् ॥ इति श्यामागायत्रीमंत्रः ॥ अस्य
उपासनाद्देवसमो भवेत् ॥चिंतितार्थसिद्धिःस्यात्
॥ ३ ॥ अथोच्छिष्टचाण्डालिनीचेटकम् ॥ तदुक्तं
मंत्रमहार्णवे ॥ अथ मंत्रः ॥ "ॐ नम उच्छिष्ट

चाण्डालिनि वाग्वादिनि राजमोहिनि प्रजामोहि
नि स्त्रीमोहिनि आन आन वे वे वायुवायु उच्छि
ष्टचाण्डालि सत्यवादिनीकी शक्ति फुरै स्वाहा॥"
इति मंत्रः ॥ अस्य विधानम् ॥ भोजनकरके
जूंठेमुख इस मंत्रको एक लाख जपै। पीछें जहां
कहीं एकांतमें बैठकर इस मंत्रका स्मरण करोगे,
वहीं भोजन आकर अपने आप उपस्थित होगा।
॥ इति श्रीह० वि०बृ०उपा०श्रीमदुच्छिष्टचाण्ड।

लिन्युपासनानिरूपणंनाम षट्चत्वारिंशदधिक द्विशततमोऽध्यायः ॥ २४६ ॥

---

एतत्पुस्तकं खानदेशीयरावेरग्रामनिवासिश्रीपरशुरामभट्टतनय-गोविन्दशास्त्रिद्वारा सम्यक्तया अनेकप्रति (आदर्शपुस्तक) स्थशुद्धपाठभेदादिपर्यालोचनपुरःसरं परिशोधितम् ।

---

इदमध्यायद्वयात्मकं पुस्तकं मुम्बय्यां खेमराज श्रीकृष्ण-दासश्रेष्ठिना स्वकीये "श्रीवेंकटेश्वर" स्टीम् मुद्रणालये मुद्रयित्वा प्रकाशितम् । संवत् १९६४ शके १८२९,

इति

उच्छिष्टगणपत्युच्छिष्टचाण्डालि-

न्युपासने समाप्ते ।